इदमिति। इदं घटादि द्रव्यं पुरो दृश्यमानमित्थमेतादृशं घटादिरूपमेव तथेदं रज्ज्वादि द्रव्यं नेत्थं नेतादृशं सर्पादिरूपं नैव भवतीत्येवं यत्प्रसिद्धं निश्चीयते निश्चयेन ज्ञायते स हि स उक्तो हि प्रसिद्धो भावो विकारो बुद्धिभवो बुद्धिजन्योऽस्तीति ज्ञेयम्, आत्मा तत्साक्षी प्रत्यगात्मा निरञ्जनो निर्गतं सर्वदा भिन्नत्वमञ्जनं बुद्धितद्वृत्त्युपाधिर्यस्मात्स तथाभूतो ऽत एव शुद्धस्तत्साक्षित्वमलरहितोऽस्तीत्यनुसन्धेयम् ॥ ७ ॥

इदानीमहङ्कारवृत्तिभ्योऽप्यात्मानं विविच्य दर्शयति ।

ज्ञत्वकर्तृत्वभोक्तृत्वबध्यघातकतादयः ।

अहङ्कारभवा भावा आत्मा शुद्धो निरञ्जनः ॥८॥

ज्ञत्वेति । ज्ञत्वकर्तृत्वभोक्तृत्ववध्यघातकतादयो ज्ञत्वं ज्ञानेन्द्रियव्यापारकर्तृत्वाभिमानित्वं कर्तृत्वं कर्मेन्द्रियव्यापारकर्तृत्वाभिमानित्वमेतदुभयं विज्ञानमयाभिमानजन्यं, भोक्तृत्वमहं भोक्तेत्येवमभिमानित्वमेतदानन्दमयकोशाभिमानवृत्तिः, बध्योऽहमेतस्य बधार्ह इत्येवं स्थूलशरीराभिमानित्वं, घातकता घातकोऽहमेतस्येत्यभिमानस्तस्य भावस्तत्ताऽऽदिर्येषां ते तथा भूतास्ते सर्वेऽपि भावा विकारपदार्था अहङ्कारादुद्भव उत्पत्तिर्येषां ते तथा भूता ज्ञेया आत्माऽहङ्कारतद्वृत्तिसाक्षी प्रत्यक्चैतन्यरूपो निरञ्जनोऽहङ्कारतद्वृत्त्युपाधिरहितोऽत एव शुद्धस्तत्साक्षित्वमलरहितोऽस्तीत्यनुसन्धेयः ॥ ८ ॥

इदानीं चित्तवृत्तिरूपोपाधिभ्य आत्मानं विविच्य दर्शयति ।

स्मृतिः पूर्वानुभूतस्य प्रत्यभिज्ञा च तादृशी ।

एते चित्तभवा भावा आत्मा शुद्धो निरञ्जनः ॥९॥

स्मृतिरिति । पूर्वानुभूतस्य पूर्वं पूर्वकाले कदाचिदनुभूतो

नुभवगोचरः कृतो यः पदार्थस्तस्य घटादिपदार्थस्य स्मृतिः स्मरणं, तादृशी तद्दृत्प्रत्यभिज्ञा चानेकवृत्तिविषयाणामनेकवृत्तीनामेकविषयत्वपूर्वकमेकवृत्तित्वप्रतीतिरिति लक्षणलक्षिता सा प्रत्यभिज्ञाख्या वृत्तिः, एताभ्यामनुभवाख्या वृत्तिरपि ग्राह्या, एते स्मृत्यादयो भावाः पदार्था विकारा इत्यर्थः, चित्तभवाश्चित्ताच्चिताख्याया अन्तःकरणवृत्ते र्भव उत्पत्तिर्येषां ते तथोक्ता ज्ञेया, आत्मा चित्ततद्वृत्तिसाक्षी प्रत्यगात्मा निरञ्जनश्चित्ततद्वृत्तिरूपोपाधिरहितोऽत एव शुद्धश्चित्ततद्वृत्तिसाक्षित्वमलरहितोऽस्तीत्यनुसंधेयम् ॥ ९ ॥

एवमन्तःकरणचतुष्टयतद्वृत्त्युपाधिभ्य आत्मानं विविच्य दर्शयित्वेदानीं शरीरत्रयतदभिमानिभ्योऽप्यात्मानं विविच्य दर्शयति ।

ये विश्वतैजसप्राज्ञा जाग्रत्स्वप्नसुषुप्तिषु ।
अवस्थाभेदजा भावा आत्मा शुद्धो निरञ्जनः ॥ १० ॥

ये इति । जाग्रत्स्वप्नसुषुप्तिषु जाग्रतीन्द्रियैरर्थोपलब्धिर्जागरितमित्युक्तलक्षणायां जाग्रदवस्थायां स्वप्ने च जाग्रदवस्थावत्सर्वेन्द्रियेषु सुप्तौ लीनेषु सत्सु जाग्रत्संस्कारजः प्रत्ययः स स्वप्न इत्युक्तलक्षणायां स्वप्नावस्थायां च सुषुप्तौ च सर्वेन्द्रियाणां स्वकारणाज्ञाने लयेन स्वकारणाज्ञानमात्रत्वमित्युक्तलक्षणायां सुषुप्त्यवस्थायां क्रमेण ये प्रसिद्धा लोके च शास्त्रे च तत्तदवस्थाभिमानिनो विश्वतैजसप्राज्ञा विश्वश्च जाग्रदभिमानी विश्वाभिधस्तैजसश्च स्वप्नावस्थाभिमानी तैजसनामा प्राज्ञश्च सुषुप्त्यभिमानी प्राज्ञनामकः सन्ति ते सर्वेऽप्येतेऽवस्थाभेदजा अवस्थाना जाग्रदाद्यवस्थानां ये भेदा वैलक्षण्यानि सन्ति तेभ्यः